


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः ३ | 15 APRIL 1965 | क्रमाङ्कः ४



वत्सरारम्भाङ्कः] शकवर्षः १८८७ [मूल्यम् ४० पैसाः

# विषयसूचिका







वाणीं भजत गैर्वाणीम् !



# जागृहि

जागृहि हे हे भारत
जागृहि हे शौर्यकलित
जागृहि देशावनरत
जागृहि जागृहि जागृहि ।

अणुस्फोटविषमेऽस्मिन्
गुणविहीनकलेऽस्मिन्
क्षणध्वंसनिरतेऽस्मिन्
घनकरालकालेऽस्मिन् ॥ ॥ जा ॥

पूर्णशीतकालेऽस्मिन्
तूर्णयानकालेऽस्मिन्
उदीर्णवैरकालेऽस्मिन्
विदीर्णतुहिनदुर्गेऽस्मिन् ॥ ॥ जा ॥

पार्श्वं परिवर्त्य स्वपिषि
कण्टकानि न विगणयसि
प्रच्छदमाच्छादयसि चेत्
गच्छेः प्रहारपात्रताम् ॥ ॥ जा ॥

प्रत्यणु ते देहेऽस्मिन्
प्रत्येतु तदुष्णत्वम्
येन कोपप्रभावेण
धक्ष्यसि शत्रून् क्षणेन ॥ जा ॥

भानुर्बहिरागच्छति
नाना कूजन्ति खगाः ।
धेनवः स्ववत्सान् भृश-
माह्वयन्ति सप्रेमम् ॥जागृहि॥



# सम्पादकीयम्



भारतसर्वकारः अधुना जागरित आसीत्, संस्कृतस्य समुन्नत्यै यत्किंचित् कर्तुमध्यवस्यतीति च वार्तां श्रुत्वा मोदामहे। बहोः कालात् वाङ्मात्रेण संस्कृतानुनयः क्रियत एव तेन। तथापि अधुना अयं विशेषः यत् संस्कृतसंघसूचितान् विषयान् सकलान् सर्वकारः अंगीकरोति। न तावता अलं, अपितु तत्सूचनाः सर्वा अपि आचरणेन सभाजयितव्याः। अपि च स्वच्छन्दसंस्कृतसेवासंघानां परिपोषणं तत्राप्यावश्यकं भवति। तादृशसंघैः प्रचाल्यमानानां परीक्षाणां अनुमोदनं, तदुत्तीर्णानां वृत्तिकल्पनम, तद्दत्तोपाधीनां अनुबन्धविशिष्टयोग्यतात्वेन परिगणनम् इत्यादीनि प्रोत्साहनानि आवश्यकानि। तथा यदि क्रियेत स्वच्छन्दसंस्थोपाधीनां महिमा प्रजाभिः ज्ञायेत, तेन च बहुलाः प्रजाः संस्कृताभ्यासाय अहमहमिकया पुरस्सरा भवेयुः।

इदं न विस्मर्तव्यम्-यद् यथाशीघ्रं यथाविस्तृतं यथाविपुलसंख्यं स्वच्छन्दसंस्थाभिः संस्कृतज्ञाः सम्पाद्यन्ते, न तथा सर्वकारेण वा तदनुबद्धसंस्थाभिर्वा संपादयितुं शक्यन्ते। हिन्दीप्रचारविषये दक्षिणभारतहिन्दीप्रचारकसभया यावत्कृतं परिमितेन कालेन न तावत् सर्वकारेण विश्वविद्यालयैर्वा कर्तुं शक्यते इति प्रत्यक्षमेव भासते। तथैव संस्कृतविश्वपरिषदा संस्कृतभाषाप्रचारसभया च क्रियमाणा संस्कृतव्याप्तिः न साधारणी भवति। धनसाह्यमन्तरा, औद्योणिकलाभवन्तरा, अन्धकारबन्धुरे भविष्यति मार्गे एतावद्दूरप्रयाणं न सुलभं भवति। अथापि निरुत्साहं दूरतो निरस्य आत्मशक्तिमेवावलम्ब्य, प्रजाभावमेव बहुमान्य, कण्टकबहुले अस्मिन् संस्कृतप्रचारमार्गे बहवस्संस्था यान्ति अविश्रांतं अग्रभूमिप्राप्त्यै।

अयं च प्रभुतायाः उचितोवसरः तासां सेवामंगीकर्तुम्, स्वकृतज्ञतां प्रदर्शयितुं च। अन्धकारबन्धुरे अस्मिन् संकटकाले ताः संस्थाः स्वसेवया करदीपकया सुमार्गं अस्पष्टतया सूचयन्ति। यदि दीपिकाज्वालायाः अपक्षयात्पूर्वमेव

कियानपि स्नेहः तत्र समर्प्येत तदा सा उज्ज्वला प्रोज्ज्वला च भूत्वा निरपायं मार्गं दर्शयित्वा प्रभुत्वशकटं निरुपद्रवं नेष्यति गम्यम् ।

आग्रहाणां अनुग्रहाणां निग्रहाणां विग्रहाणां च नायं कालः। भारत-देशगौरवस्य यदुचितम्, भारतसंस्कृतेः यत्संरक्षकं, भारतप्रजायाः यदनुरूपं, भारत-जातेः यज्जीवनम्, भारतसंस्कृतेः यत्संरक्षकं, भारतैकतायाः यत्सुघटकं, तदेव कर्म निर्वर्तनीयमस्माभिः प्रभुतया जनतया च।

अतः मुक्तकण्ठं प्रार्थ्यते भाषाविवादान् दोषभूयिष्ठान् विभाव्य भारतसहजां संस्कृतभाषामेव विस्तारयन्तु सर्वतः, अपि च तारयन्तु देशं अपद्भ्यः इति ॥

# तम् वन्दे कविवेधसम्

वै. श्रीनिवासरायः,
श्रीकाकुलम्.

यः काव्यरसपीयूषपात्रमादाय पाणिना ।
धन्वन्तरिरिवोऽत्पन्नस्तम् वन्दे कविवेधसम् ॥ ॥ १ ॥
यं क्रौञ्चकरुणाक्रन्दः प्रविश्य वदनोदरात् ।
काव्यरूपेण निष्क्रान्तस्तम् वन्दे कविवेधसम् ॥ ॥ २ ॥
येन स्वर्गादिवाऽनीते काव्यभगीरथीजले ।
सरस्वती कृतस्नाना तम् वन्दे कविवेधसम् ॥ ॥ ३ ॥
यस्मै शिल्पजगत्स्तृष्टिम् स्वयम् कर्तुमपारयन् ।
धतापि स्पृहया चक्रे तम् वन्दे कविवेधसम् ॥ ॥ ४ ॥
यस्मात्तीर्थादिवादाय तोयमल्पम् कवीश्वराः ।
सरस्वत्यै ददत्यर्घ्यम् तम् वन्दे कविवेधसम् ॥ ॥ ५ ॥
यस्योऽतुङ्गकलाभृङ्गमारोहुमसकृत्प्लुतो ।
व्रीळितः कालिदासोऽपि तम् वन्दे कविवेधसम् ॥ ॥ ६ ॥
यस्मिन् रम्यविचित्रार्थकल्पनाऽनल्पसम्पदः ।
सद्मनीव कृताऽवासास्तम् वन्दे कविवेधसम् ॥ ॥ ७ ॥

# नान्यः पंथा विद्यतेऽयनाय

## मध्वनवम्यां सगर प्रद्युम्नाचार्यभाषणस्य संग्रहः
## शाहपूर.

हे मानवाः नः एतौ मार्गौ गीतौ। इह संसारे ऐहिकामुष्मिकफलप्राप्त्यर्थं गुरुभक्तिद्वारा वासुदेवभक्तिं यजनं च विना अन्यः शिवः पंथाः न। तस्मात् सर्वात्मना हरिः श्रोतव्यः मंतव्यः कीर्तितव्यः स्मर्तव्यः। ये हरिकथामृतं पिबंति ते पूतात्मानः तच्चरणसरोरुहांतिकं व्रजंति। एतत् आमुष्मिकफलप्राप्तये निगदितम्। तथा च ऐहिकफलप्राप्तये च। म्रियमाणानां नृणां एतत् निगदितम्। अथ ब्रह्मवर्चसकामः ब्रह्माणं यजेत्। इंद्रियकामः इंद्रम्, प्रजाकामः दक्षादीन्, श्रीकामः दुर्गाम्, तेजस्कामः अग्निम्, द्रव्यकामः वसून्, वीर्यकामः रुद्रान्, अन्नादिकामः अदितिम्, स्वर्गकामः आदित्यान्, राज्यकामः विश्वान् देवान्, देशस्थप्रजानां स्वाधीनतां इच्छन् साध्यान्, आयुःकामः अश्विनौ, पुष्टिकामः इलाम्, प्रतिष्ठाकामः द्यावापृथिवी, रूपकामो गंधर्वान्, स्त्रीकामः उर्वशीम्। सर्वेषां आधिपत्यकामः परमेष्ठिनम्, यशःकामः यज्ञम्, कोशकामो वरुणम्, विद्याकामः शंभुम्, दांपत्यप्रीतिकामः उमाम् यजेत्।

धर्मकामः विष्णुम्, पुत्रकामः पितॄन्, बाधानिवृत्तिकामः यक्षान्, राज्यकामो मनून्, शत्रुवधकामः राक्षसम्, विषयकामः सोमम्, वैराग्यकामः वायुम्, बलकामो मरुद्गणान्, अकामः सर्वकामो वा मोक्षकामो वा भक्तियोगेन परं पुरुषं विष्णुं यजेत्। इह यजतां यद्भगवति भावः सत्संगश्च एतावता एव निःश्रेयसोदयः। अतः हरिकथासु, रतिं को न कुर्यात्? अनेन क्रमेण उपासनेनानेन च आनंदमयः सन् शान्तं, ज्ञानं, सत्यं, अनन्तं, आत्मानं, नारायणं उपैति। मध्वसिद्धांतसारः —

श्रीशो विश्वं विधाता विमलगुणानिधिः सर्वसेव्यः स्वतंत्रः
तद्भक्तिर्मुक्तिहेतुः विलसति सततं तारतम्यं च विश्वम्।
सत्यं भेदाश्च नित्या इति समुपदिशन् यः सदा मोदते तं
ध्यायेच्छ्रीशांघ्रिपूजारतममलमतिं श्रीमदानंदतीर्थम्॥



# भारतदेशे संस्कृताध्ययनमत्यावश्यकम्

वारणासेयहिन्दूविश्वविद्यालयस्य भारतीयशिल्पकलाशाखाध्यक्षः वि. यस्. अगर्वालामहोदयः कामरूपेषु गौहत्यां द्वाविंशतितमे अखिलभारतप्राच्यभाषाकोविदसमावेशे आध्यक्ष्यं वहन् एवमभाषत "भारतीयप्रजाहृदयस्य समग्रता संस्कृभाषायामेव प्रतिबिम्बिता वर्तते। संस्कृताध्ययनेन च तद्भाषायाः प्रचारेण च भारतजातेः एकतायाः दृढीकरणं सुलभं भवति। जातीयतायाः प्रतिष्ठापनं संस्कृताधीनमेव वर्तते। अतः सर्वकलाशालास्वध्येतव्यानां विविधशास्त्राणं संबन्धीनि सांकेतिकपदानि व्याकरणशुद्धानि च रूपाणि संचेतुं प्रयतितव्यम्। प्राचीनसांप्रदायरीत्या संस्कृताध्येतृणां पंडितानां व्यासङ्गमप्रतिहत प्रवर्तयितुं पांडित्यप्रकर्षतां च संरक्षितुं पंचसहस्रं यावज्जीवभृतयः प्रवर्तनीयाः" इति॥

श्री गंगा बि. दक्षिणामूर्तिमहोदयः एवं वदति—संस्कृतभाषा स्वस्थाने भारते स्वप्राधान्यात् प्रच्याव्यते इति महत् कष्टम्। अपरं चेदमाश्चर्यकरं यत् भौतिकसुखमात्रप्रवणेन अमेरिकासंयुक्तराष्ट्रेण संस्कृताध्ययने अनुरक्तिः उपचीयते। एतादृशी संस्कृतानुरक्तिः प्रतिभाकेद्रभूते हार्वर्डविश्वविद्यालये अत्यधिकतया वर्तते।

संस्कृतभाषाभ्यसनं च संयुक्तराष्ट्रे १८५० वत्सरे हार्वर्डविश्वविद्यालये च येकृविश्वविद्यालये च समारब्धमासीत्। अधुना च कालिफोर्निया चिकागो, हार्वर्ड, जान्स, कोप्किन्स, विसकानसिस, येट, कोलंबियाविश्वविद्यालयेषु सर्वेर्ष्वपि संस्कृतपीठाः वर्तन्ते। संस्कृतस्य प्रभावः एकशताब्दात् पूर्वमेव अमेरिकादेशे व्याप्नोदिति विभाव्यते। प्रख्यातसंस्कृतपंडितः अमेरिकाभिजनः विलियंड्वैट्र्विट्नी १८७० वर्षे संस्कृतपुस्तकानि प्रकाशयितुमारेभे। हार्वर्डनगरे संस्कृताचार्यः डा. लेन्मान्महोदयः संस्कृतवाचकानि अलिखत्। तस्य पुस्तकान्येव अधुनापि तत्र पाठ्यन्ते। तत्र क्रमशः संस्कृताध्येतृणां संख्या अभ्यवर्धत। हार्वर्डविश्वविद्यालयसंस्कृताचार्येण डा. इंगाल्समहोदयेन इयं संस्कृतस्य उन्नतदशा परिगणिता। भारतदेशविषये भातीयवेदान्तविषये च उत्सुकानां विद्यालये प्रथमकक्ष्यायां १७ विद्यार्थिनः (४ विद्यार्थिन्यः) मध्यमकक्ष्यायां ८ विद्यर्थिनः, उन्नतकक्ष्यायां ७ विद्यार्थिनः (एका विद्यार्थिनी) च संस्कृतमभ्यस्यन्ति। मद्रासविश्वविद्यालये १९५९-६१ वर्षपर्यन्तं षण्णामेव विद्यार्थिनां स्थितिः अतीव हास्यस्पदा वर्तते।

## विद्यार्थिजीवितम्

अमेरिकायां विद्यार्थिनां वेषभूषादिवैचित्र्ये अभिरुचिः आलोच्यते चेत् तेषां विश्रान्तिरेव न भवतीति द्योतेत। स्वोदरपोषणार्थं तैः यत्रकुत्रापि कंचित्कालं आर्थिकलाभकरं कर्म आचरितव्यं, निर्दिष्टविशिष्टग्रन्थपठनं च कर्तव्यम्, पदे पदे च परीक्षाश्च समाधातव्याः। एवं पठनस्पर्धा च तीव्रतरा भवति तेषाम्। वर्षारम्भात् आन्तं तेषां विद्याकृषेर्विषये निष्पाक्षिकी निशिता च पर्यवेक्षणा भवति। संस्कृतविद्यार्थिभिश्च एतादृशैः सकलैः निर्बन्धैः अनिर्मुक्तैः इतरेभ्योप्यधिकतरं श्रमितव्यम्।

हार्वर्डविश्वविद्यालये संस्कृतविद्यार्थिनां प्रथमवत्सरे प्रथमतः कतिपयसप्ताहेषु अक्षराभ्यासः अनन्तरं व्याकरणाभ्यासश्च कर्तव्यो भवति। पेरीमहाशयस्य लान्मन्महाशयस्य च पुस्तकानि प्रायशः उपयुज्यन्ते। हितोपदेशात् कथासरित्सागरात् मनुस्मृतेश्च उद्धृताः कतिचिदंशाः अपि पाठ्यन्ते। एवं प्रथमवत्सरान्ते ते विद्यार्थिनः पठनसमर्थाः सम्पद्यन्ते।

## पठनकार्यक्रमः

माध्यमिकदशायां भगवद्गीताशाकुन्तलरामायणमहाभारतछान्दोग्योपनिद्रूपेभ्यः प्रौढग्रन्थेभ्यः उद्धृतान् अंशान् पठित्वा विद्यार्थिभिः स्वयमेव अर्थो वर्णयितव्यः। अनन्तरवत्सरे ऋग्वेदः पाणिनीयमित्यादिकं पाठ्येत। उन्नतदशायां प्रतिवर्षं पाठ्यविषयविपरिवर्तनं भवति। ते च विद्यार्थिनः स्वेच्छया न्यायबौद्धशांकरवेदान्तादिषु अभिलषितविषयं पठेयुः। अस्यां दशायां विद्यार्थिनः स्वाधीतविषयेषु वादोपवादान् कुर्वन्तः संस्कृताध्ययने उत्साहातिशयं आविष्कुर्वन्ति।

हार्वर्डविश्वविद्यालयाचार्यः इंगालसः भारतदेशमागत्य वारणासीं कालीघट्टं मद्रनगरीं मुम्बापुरीं अन्यनगराणि च दृष्ट्वा संस्कृताभ्यसने प्राचीनपद्धतिरेव साधीयान् मार्ग इति अवदत्। अमेरिकीयाः प्रतिवर्षं भारतदेशात् महतः पण्डितान् आहूय तैः विश्वविद्यालयेषु उपन्यासान् दापन्ति। अल्पकालात् पूर्वमेव मद्रासविश्वविद्यालयप्राचार्यः वेंकटेश्वरः, बाराणसेयविश्वविद्यालयप्राचार्यः टि. आर्. वि. मूर्तिः च तत्र आहूतौ। इदानीमपि कलकातानगरात् प्रतिवर्षं उन्नतकक्ष्या अभिवीक्षितुं एकः विद्वान् आहूयते।

एतेन इदं परिज्ञायते अमेरिकासंयुक्तराष्ट्रेषु तत्रापि हार्वर्डविश्वविद्यालये संस्कृताध्ययनं अतिसुसंघटिततया प्रवर्तते इति॥

# अमेरिकासंयुक्तराष्ट्रेषु

## संस्कृतनाटकप्रदर्शनम्

क्रैस्तव्यां सप्तमशताब्द्यां पल्लवराजचंद्रेण महेन्द्रविक्रमेण विरचितं "वारांगना-मुनिवरश्च" (The Countesam and Saint) इति संस्कृतरूपकं वाषिंगटनविश्वविद्यालयप्राचार्यस्य श्रीबलवन्तसयगार्गि-महोदयस्य दर्शकत्वेन च अम्मेरिकाछात्रैः प्रदर्शितम्। द्रष्टारश्च तद्रूपकं वीक्ष्य विषयं अक्लेशेन अजानन् अनन्दंश्च।

अभारतेष्वपि देशेषु गीर्वाणवाण्याः विलासाः एवं विस्फुरन्तीति महदानन्दस्थानम् ॥

# आचार्यदेवो भव

आर्षविद्याभूषणः जटावल्लभः पुरुषोत्तमः एम्. ए.,

( २७-४-५८ दिने विजयवाडाकाशवाण्या प्रसारितम् )

यथा मातापित्रोः शरीरकारकत्वं एवं आचार्यस्य ज्ञानजनकत्वम्। माता-पितृभ्यां जन्मप्राप्तिः। अत एव धर्मग्रन्थेषु सर्वेषां गुरूणां मध्ये मातापित्राचार्याणां श्रैष्ठ्यमुक्तम्। एतेषां त्रिमूर्तिसंज्ञापि दृश्यते। एतेषां शुश्रूषया सर्वतपःप्राप्तिर्मनुना प्रोक्ता।

तेषां त्रयाणां शुश्रूषा परमं तप उच्यते।
न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ॥

धर्मसेवनस्यापि एतत्त्रयाणामनुमतिरपेक्ष्यते इत्यनेनैव ज्ञायते एतेषां पूज्यता। तत्पूज्यत्वं स्पष्टतयैव प्रतिपादितं तैत्तिरीयोपनिषदि "मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव" इति। महर्षेर्गौतमस्य मते एतत्त्रयाणां मध्ये आचार्यस्यैव श्रैष्ठ्यम्-आचार्यः श्रेष्ठो गुरूणाम्। केषांचिन्मते तु मातुः श्रैष्ठ्यम्।

यो महामन्त्रमुपदिशति, यद्वा ब्रह्मविद्यां प्रददाति, यद्वा कर्मब्रह्मात्मकं द्विविधं वैदिकं मार्गं ससंप्रदायं सरहस्यं च ग्राहयति स आचार्यः। अयं स्वयमाचरति, छात्रानाचारयति च वैदिकप्रस्थानम्। आचार्यस्य उपाध्यायाख्यसामान्याध्यापकात् गरीयस्त्वं मनुना कीर्तितम् "उपाध्यान्दशाचार्यः ........ गौरवेणातिरिच्यते" इत्यत्र। आचार्योपदेशस्सर्वथा श्रेयोमार्गप्रदर्शक इति बुद्धया आचार्यं शुश्रूषन् छात्रः परं श्रेयः अधिगच्छति। यथा शिशवे कीदृश आहारो देयः, कथं वा देयः इत्यदिविषयेषु मातुर्निष्णातत्वं तथा अंतेवासिने को वा उपदेशः कर्तव्यः कथं वा कर्तव्य इत्यत्र आचार्यस्य अधिकारः। यथा शिशुविषये मातृहस्तात् विषप्रयोगभीतेः प्रसक्तिर्नास्ति, एवं आचार्यात् शिष्यस्य अश्रेयोमार्गोपदेशप्रसक्तिर्नास्ति। यदा छात्रे गुरुं प्रति एतादृशविश्वासो लुंप्येत् तदा छात्राचार्यसम्बन्धस्य उच्छेदः। यत्र आचार्याधीनत्वं पूर्णतया तत्रैव शिष्यस्य उद्धारः। अत एव उपनयनकाले "आचार्याधीनो भव" इति वटुं प्रति उपदेशः।

यथा परमेश्वरं प्रति भक्तस्य प्रपत्तिरेवं अंतेवासिनोऽपि आचार्यं प्रति। यथा ईश्वरस्य एवमाचार्यस्यापि इयं प्रतिज्ञा "न मे भक्तः प्रणश्यति" इति।

न केवलं विद्योपार्जनावसरे, किन्तु सर्वेष्वपि कालेषु आचार्याधीनत्वं शिष्यस्य। मधुकरवृत्या आनीतः आहारः गुरवे निवेद्यैव छात्रेण भोक्तव्यः।

"निवेद्य गुरवेऽनुज्ञातो भुञ्जीत" रजस्तमोगुणाभिवर्धकाः आहारांशाः त्याज्याः। सत्त्वाभिवर्धकाः ग्राह्याः। अतः अत्रापि गुरुनिर्देशः अपेक्ष्यते। एवं सर्वदा सर्वथा शरण्य आचार्यः छात्रस्य, मार्गदर्शकश्च। "तमसो मा ज्योतिर्गमय" इतीयं प्रार्थना यथा ईश्वरं प्रति युज्यते एवमाचार्यं प्रत्यपि।

देवादपि गुरोरिदं वैशिष्ट्यं-यद्यपि छात्रेण देवापचारः कृतः तत्पापनोदनाय आचार्येण कल्प उपदिश्यते। यदि आचार्य एव छात्राय कुप्यति तदा न कश्चिदप्यस्मात् छात्ररक्षकः।

अत एवोक्तम् – "दैवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन" इति।

किन्तु छात्रेभ्यो रुष्टाः आचार्या न क्वापि दृश्यन्ते। कारुण्यमूर्तयः खल्वाचार्याः। दक्षिणानपेक्षयैव ते छात्रानध्यापयन्ति, उद्धरन्ति च। विद्यासमाप्त्यनन्तरमेव छात्रेण गुरुदक्षिणा दातव्या "विद्यान्ते गुरुरर्थेन निमन्त्र्यः"।

तथापि प्राञ्च आचार्याः गुरुदक्षिणाग्रहणविमुखा एव आसन् प्रयशः ।

न केवलं ग्रन्थाध्यापनेन, किन्तु मन्त्रोपदेशेन ब्रह्मविद्योपदेशेन च आचार्याश्शिष्यान् तारयितुं प्रभवन्तीत्युक्तपूर्वम् । मन्त्रबलप्रपूरितस्य आचार्यस्य मुखान्निस्सृतो मन्त्रः शिष्यं प्रविश्य तद्धृदये महान्तं विकासं जनयति । दशवर्षोपासितेनापि मन्त्रेण यो हृदयविकासो न साध्यते स विकासः क्षणादेव साध्यते मन्त्रबलयुक्तस्य आचार्यस्य मुखात् संक्रामितेन मन्त्रेण ।

यथा भगवान् विचित्रैर्मार्गैः स्वभक्तान् रक्षति उद्धरति च तथैव आचार्यः सच्छात्रान् । आचार्यस्य धौम्यस्य शिष्योद्धरणरीतिः महाभारते सम्यक् वर्णिता । केदारखंडं बधान इति तेन आज्ञापितः शिष्यः आरुणिः अन्यथा केदारखंड़बन्धने अशक्तस्सन् स्वीयेनैव शरीरेण जलं रुरोध । तदसाधारणगुरुभक्तया परितुष्टः आचार्यः शिष्याय वरं ददौ । विनाप्यध्ययनं सर्वे वेदाः सर्वाणि ते शास्त्राणि च प्रकाश्यन्ते इति ।

एवमेव उपमन्युराचार्यवाक्यानुसारेण अन्यमाहारं परित्यज्य अर्कपत्रभक्षणेन कालं यापयन्नासीत् । अनेन अहारेण तस्य अन्धत्वं जातम् । गुरुणा धौम्येन अन्धत्वनिवारणोपायोप्युपदिष्टः । आश्विनदेवस्तोत्रपरान् मन्त्रान् उपदिश्य सः शिष्यं प्रत्युवाच "पठितैरेतैर्मन्त्रैस्ते दृष्टिः पुनरायाति" इति । तथैव उपमन्युना दृष्टिः पुनस्संलब्धा ।

एवमाश्रितरक्षकत्वलक्षणं यद्भगवति दृश्यते तदाचार्येपि लक्ष्यते । न केवलं वाङ्मूलकोपदेशेन किन्तु दृष्टिप्रसारेणापि आचार्याः छात्राननुगृह्णन्ति । मत्स्यशिशवो माता दृष्टमात्रा एव निवर्तितक्षुद्बाधा भवन्तीति श्रूयते । एवं दर्शनमात्रेणैव छात्रान् रक्षन्ति पुनन्ति च आचार्याः । कूर्मन्यायेनापि ते शिष्यानुद्धर्तुं प्रभवन्ति । कूर्मः दूरस्थ एव स्वशिशुं स्मरन् तत्कुक्षिपूर्तिं हेतुर्भवति । गुरोः प्रवासकाले गुरुकुले गुर्वाज्ञानुसारेण अग्निपरिचर्यां कुर्वतः शिष्यस्य अग्नेस्सविध एव सर्वे वेदाः प्रकाशिता आसन्निति च काचन कथा उपनिषत्सु श्रूयते ।

अचिन्त्यापरिमेयशक्तेः परमेश्वरस्य यावन्तो भक्तानुग्रहमार्गा दृश्यन्ते तावन्त आचार्यस्यापि। परिपक्वपुण्यविशेषस्य पुरुषस्य मोक्षरूपचरमफलप्राप्तिः आचार्यस्य सकाशात् भवति। "मदनुग्रहपात्रभूतपुरुषाय मत्प्राप्तिसाधनभूतं बुद्धियोगं ददामि"इति भगवता कृष्णेनोक्तम् "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति। तं च बुद्धियोगं भगवान् आचार्यरूपेण आगत्य ददातीति हेतोः "गुरुर्ब्रह्मा गुरुर्विष्णु" रित्यादिवचनं न केवलमर्थवादः, किन्तु यथार्थवादः।

एवं बहुधा सिद्ध्यति आचार्यस्य देवत्वम्॥

(आकाशवाणी सौजन्येन)





# राजाजीकथा १२

## संघसेवा

(आ. वरदराजः)

ताम्रपुरे कश्चिन्महाविद्यालयोऽस्ति (हैस्कूल्)।

तत्पुरस्य मानचित्रं (Map) मानचित्रावलीं वा (Atlas) परिशीलयितुं मा प्रयतध्वं। नेदं वस्तवं नाम तस्य। विद्यार्थिनः संघसेवां (Social Service) कर्तुं प्रस्थिताः। अस्य दलस्य गणिताध्यापकः नेतृत्वं स्वीचकार। संघसेवा नाम दीन-हीन-जनोपकार एव। एवं परोपकारपरायणतैव संघसेवायाः मूलम्।

निकटस्थे वेम्पाडुनामके ग्रामे अतिवृष्टेः हेतोः बहूनि गृहाणि शिथिलान्यासन्।

विद्यार्थिनः लारीशकटात् दब दबेति अवातरन्। ग्रामीणाः प्राहुः, यावत्तान् अपश्यन् - "भो भद्राः स्वयं सेवकाः! अस्माकं सर्वाण्यपि गृहाणि वर्षेण शिथिलानि सर्वतो जलस्यन्दीनि नैवेदानीं वासयोग्यानि। सर्वे वयं बहुक्लेशमनुभवामः" - इति।

मा भूत भीताः, वयं सर्वं करिष्यामः - इत्याह गणिताध्यापकः ।

"ॐ, आरोहत गृहोपरितलं" - इत्यादिदेशाध्यापकः । विद्यार्थिनः ईषत्पश्चाद्भावं गताः । तेषां अद्य यावदेतादृशानि कार्याणि न परिचितानि ।

"किमर्थं तूष्णीं स्थीयते ? अथवाऽस्तु, अहमेवारुह्य दर्शयामि यावत्कथमिति" इति ब्रुवन्नेव गणिताध्यापकः उपर्यारुरोह ।

गृहारूढं वयोवृद्धं अध्यापकं दृष्ट्वा केचन विद्यार्थिनोऽप्यारोहन् । आरुह्य पटलं ( टाप् ) अधिष्ठिताः । तावदौन्नत्ये स्थितान् तान् पश्यतामेव अन्येषामपि उत्साहः प्रवृद्धः । सर्वेऽपि विरुविरिति गृहपटलमारुह्य स्थिताः ।

अय्यो ! आर्द्राणां पटलशकलानां (Tiles) उपरि इयन्तो जना आरुह्य चरेयुश्चेत् सर्वाण्यपि तानि भग्नानि भवेयुरिति व्याकुलिता गृहिणी । यत्र यत्र च ते चरन्ति तत्र सर्वत्र पटलशकलानि भग्नान्यासन् । वर्षेण अविकलान्यपि शकलानि (Tiles) एतेषां सञ्चारेण-पादाहत्या शकलीकृतानि । आर्द्राणां पटलशकलानां उपरि आरोहणं पदधारणं चानुचितमिति अध्यापक एव न जानाति, किमुत अबोधा विद्यार्थिनः !

अलमलं, अवतरताधस्तात्-इति स निर्धनो दुर्गतश्च गृही उच्चैर्जुघोष ! सर्वेऽवतीर्णाः ।

मा भैषीः सोदर ! मा ते भीः । वयं सर्वं सम्यक्तावत्कुर्मः । नवीनशकलानां क्रयार्थं धनसाहाय्यं प्रार्थ्य प्राप्य च सर्वतस्ते गृहं नवीकरिष्यामः इत्याह गणिताध्यापकः ।

ते सर्वे पुनस्ताम्रपुरं प्रतिनिवृत्ताः । तस्मिन्नपि दिने नक्तं वेम्पाडु ग्रामे महती वृष्टिरासीत् । तस्य निर्धनपरिवारस्य महत्कष्टमभूत् । बालाः प्रौढा वृद्धास्सर्वेऽपि अतिवृष्टिबाधिता बभूवुः । विवशा गृहिणी पत्येऽकुप्यत् ।

इत्थं तान् मर्कटान् गृहोपरि अधिष्ठाप्य, सर्वं ध्वंसितमासीत् - इति सा साक्रोशं भृशं दुःखिता ।

वराकस्स किं कुर्यात् ? अध्यापकस्य अज्ञानं संघसेवाकुतूहलं च इत्थं परिणतम् ।

गणिताध्यापकः उपर्युपरि अधिकारिनिकायसन्निधौ वारं वारं विलिख्यालेख्य प्रतीक्षाञ्चक्रे धनसाहाय्यम् । प्रार्थनापत्राणि पुनःपुनः प्रेषितानि । 'न शक्य'

मिति सर्वकारस्य सचिवालयमन्त्री निर्भरं समाहितवान् । अथ किं कर्तव्यम् ? त एव तपस्विनो विद्यार्थिनः अध्यापकश्च स्वच्छन्दं छन्दोरूपेण धनं सञ्चित्य तस्मै निर्धनाय कर्षकपरिवाराय दत्वा प्रतिनिवृत्ताः ।

एतदर्थं मासास्त्रयो गताः ।

आर्द्राणां पटलशकलानां (Tiles) उपरि सहसा पदधारणं न कर्तव्यमिति पाठशिक्षितस्तैरनया घटनया । छन्दोरूपेण सञ्चितं (Collected) धनं तत्परिवाराय दातुं ये वा विद्यार्थिनः तं ग्रामं गताः, ते सर्वे तस्या गृहिण्या आशीर्वादेन तोषिताः । धनदर्शनेन सा परमानन्दभरिताऽसीत् । अध्यापकोऽपि सन्तुष्टः - "तस्या अभिशापेभ्यः आत्मा रक्षित" इति ।

इतः परं अज्ञातेषु कार्यविशेषु न सहसा प्रवेष्टव्यमिति निश्चितं विद्यार्थिबृन्देनाऽपि ।

कथं निर्मीयन्ते पटलशकलानि ? कुत्र वा ? इत्यादि सर्वं ज्ञातुं तस्मिन्नेव ग्रामे कस्य चित्कुलालस्य गृहं गतास्ते । मृत्तिकां, कुलालचक्रं, तदुपरि कुलालेन आरब्धं भाण्डविशेषनिर्माणं सर्वं दृष्टं तैः । मृत्पात्रनिर्माणप्रकारं दृष्ट्वा विद्यार्थिनः आतीव सन्तुष्टाः ।

अथाऽऽगच्छत, गच्छामस्तावत्, कालोऽतीतः-इत्याह अध्यापकः । विद्यार्थिनां तु तत्प्रदेशं विहाय गतुं नैव सम्मतम्, अथापि आज्ञापालिता ॥

* अत्र - दब दब, बिरु बिरु, अय्यो इति अनुकरणशब्दाः ।

## मुक्तकम्

संकलयिता — मा. शिवरामराजः

भगवतो गौरीपतेर्दीनावस्था —

अत्तुं वाञ्छति वाहनं गणपतेराखुं क्षुधार्तः फणी,
तं च क्रौञ्चपतेः शिखी च, गिरिजासिंहोऽपि नागाननम् ।
गौरी जह्नुसुतामसूयति, कलानाथं कपालानलो,
निर्विण्णः स पपौ कुटुम्बकलहादीशोऽपि हालाहलम् ॥

# " तिरुवेंपावै "

**अनुवादकः —**

"पावैप्रवचनभूषणम्" शिरोमणिः, हिंदीप्रचारकः
**यन्. एस्. ताताचार्यः**, तंजापुरम्.

( पूर्वानुबन्धः )

प्रेमोत्तम्भितमन्दहासवदनेनास्मान् स्वतो लालय-
त्यस्माकं च सुधारसः क्षितिपतिः निर्दोषदास्यप्रियः ।
तस्माद्यूयमुदारचित्रचरितं तच्चास्मदीशं प्रियाः,
सङ्कीर्त्याविशत प्रभातनलिनीं कात्ययनीसुव्रते ॥ ॥ ३४ ॥

( १८ )

शोणाद्रेरधिपस्य दिव्यसविधे सेवार्थमाजग्मुषां,
देवानां प्रणमत्किरीटनिवहैस्तुल्याश्च रत्नांचितैः ।
पूर्वाद्रावुदितस्य बालतपनस्याम्भोरुहप्रेयसः,
सान्निध्ये मिहिरा गता ननु गतास्ताराश्च नष्टप्रभाः ॥ ॥ ३५ ॥

तस्माद्यो विदधाति रूपमखिलं स्त्रीपुंनपुंसादिकम्,
दिव्यं पार्थिवमेवमन्यदपि च स्वस्मात् पृथक्संस्थितम् ।
भक्तानां नयनामृतस्य मनसोन्मेषोत्सवस्य प्रिये !,
वीर्याख्यानपरा जले विहरतां कात्यायनीसुव्रते ॥ ॥ ३६ ॥

( १९ )

(भगवति शंकरे, नियमस्नानं परिसमाप्य ईप्सितं वरं प्रार्थयन्ते)

त्वद्वामाश्रितबलिका तव सदा धीनेति गाथामिमां,
निर्लज्जाः पुनरेव नव्यवचसा विज्ञापयामो वयम् ।
अस्मत्प्राणपते ! प्रसन्नमनसा संप्रार्थितं श्रूयताम् ,
अस्मत्कुम्भकुचद्वयं न हि भजेत् भक्तान्तराणां भुजम् ॥ ॥ ३७ ॥

अस्माकञ्च करो न हि प्रसरतात् भक्तान्तरासेवने,
नास्माकं नयनं कदापि रमतां अन्यत्र नक्तंदिवम् ।
यद्येवं वरमद्य नाथ ! कृपया दातुं भवान् मन्यते,
कायं भानुरितीह नैव गणना कात्यायनीसुव्रते ॥ ॥ ३८ ॥

( २० )

(अन्ततः लब्धवराः ताः कन्यका मुक्तकण्ठं मुदिताः श्रीमहादेवं आशासते)

स्वस्ति प्राक्तनदेवदेवचरणांभोजाय नित्यं नमः,
स्वस्ति प्रस्फुटरक्तपल्लवपदांभोजाय नित्यं नमः ।
स्वस्ति स्वेतरवस्तुकारणपदद्वन्द्वाय नित्यं नमः,
स्वस्ति स्वाश्रितभोगदायकपदद्वन्दाय नित्यं नमः ॥ ॥ ३९ ॥

स्वस्ति स्थावरजङ्गमस्य चरमस्थानाय नित्यं नमः,
स्वस्ति श्रीपतिपद्मसंभवदुरालक्ष्याय नित्यं नमः ।
स्वस्ति स्वीकृतभक्तपालनसदानिष्ठाय नित्यं नमः,
स्वस्ति श्रीयुतमार्गशीर्षनियमस्नानाय नित्यं नमः ॥ ॥ ४० ॥

सम्पूर्णम्



१५

# इन्दुमतीस्वयंवरम्

[ रचयिता - श्री पि. एम्. पद्मनाभशर्मा ]



( पूर्वानुबन्धः )

**राजा** – [ आत्मगतम् ] बहूपकृतं मदनेन । यथाऽस्माकमभिनिवेशः तथैव वर्तते तस्या अपि । मन्येहं मतङ्गजागमनमपि अस्मत्कल्याणसूचनायैवेति । [ सबहुमानम् ] सर्वमपि तस्य गन्धर्वराजस्यैव प्रसादविशेषः । [ प्रकाशम् ] ततस्ततः ?

**मंत्रि** – ततोहं - "मम सख्या अपि मनोरथः सफलीभविष्यति" इति किल उक्तं भद्रे ! "अपिना सूचिता का साऽपरा" इति यदाहमपृच्छं तदा "कथम् इयताऽपि कालेन न ज्ञात"मिति वदन्ती सतिर्यग्दृष्टिरेव गतवती । तदनन्तरं मयापि गन्तुमशक्यत्वात् प्रतिनिवृत्तम् । अतः उच्यते सफलीभविष्यति भवतः उद्वेग इति ।

**राजा** – [ सहासम् ] वयस्य, आवयोरित्येव वक्तव्यम् ।

[ नेपथ्ये घण्टानादः ]

**मंत्रि** – [उत्थाय] कथं कालोऽतीतः ? सखे, किंचिदनुभूयतां स्वापः । साधयामि पुनर्दर्शनाय [इति निष्कान्तः] ।

**राजा** – तल्लाभपरितुष्टस्य मम कथं वा भविष्यति स्वापः । भवतु । चित्रदर्शनेनैव अवशिष्टमपि कालं यापयामि । [इति चित्रं पश्यन् एव वर्तते]

[ नेपथ्ये वैतालिकौ ]

**प्रथमः** – रात्रिर्गता मतिमतां वर मुञ्च शय्याम्
धात्रा द्विधैव ननु धूर्जगतो विभक्ता ।

तामेकतस्तव बिभर्ति गुरुर्विनिद्रः
तस्या भवानपरधुर्यपदावलम्बी ॥ (रघुवंशात्)

द्वितीयः – भूपाल, सर्वे भूपतयश्च स्वयंवराय मतङ्गजारोहिणः गच्छन्ति । तेषु च —

केचिल्लीलारविन्दं विहतमधुकरं भ्रामयन्ति प्रकामं
केचित्कुर्वन्ति भूषां करधृतवसनैः मुक्तदोषां सकामाः ।
आविष्कुर्वन्ति भावं कररुहमृदितैः केतकीबर्हसंघैः
केचित्, केचिच्च राजन् मनसिजपठितामङ्गनां भावयन्ति ॥

अतः भवताप्यलंक्रियताम् स्वयंवरमण्टपः ।

राजा – कथं प्रभातम् !

[पुनः नेपथ्ये]

भो भो राज्ञानः, अलंक्रियन्तामासनानि । समागता ससखीजना राजकुमारी विदर्भजा ।

राजा – [ससंभ्रमम्] कथं, समागता मम मनोरथप्रियतमा ? अहमपि निर्वर्त्य प्रातःकार्यं स्मयंवरमण्टपमेव गच्छामि ।

[इति निष्कान्तः]

[ततः प्रविशति यथानिर्दिष्टा विदर्भजा]

विदर्भजा – अयि सुशीले, अप्यागतः 'सः' ?

सुशीला – कः सः ?

विदर्भजा – अयि स एव ।

सुशीला – [अनभिज्ञेव] न जाने कः स इति ।

विदर्भजा – [सदृष्टिक्षेपम्] सखि, न जाने स कुत्र वर्तत इति । आगच्छति सुनन्दा । तामेव पृच्छावः ।

[क्रमशः]




# भारतीयो विज्ञानवादः

लेखकः — लोकमित्रशास्त्री,
गुरुकुलम्, अयोध्या.

( पूर्वानुबन्धः )

अर्थात् इयं शाला नः सम्बन्धं न मुञ्चतु, अस्याः गुरुत्वं लघु भवतु, यथा वधूमिव यथेच्छं यत्रकुत्रापि कामं नयामः। महाभारतेऽपि तादृशस्य मयसभाभवनस्य चर्चास्ति यदसुरैरुह्यमानमाकाशे अन्यत्रान्यत्र वा स्थापयितुं शक्यते स्म।

## स्वरविज्ञानम्

तथैव भारते स्वरविज्ञानस्य वर्णविज्ञानस्य च यादृश्युन्नतिरभवत् न तत् क्वचित्। दुर्लभमेवाधुनिकविज्ञाने, वेदे तादृशं स्वरविज्ञानं एकमात्रयापि न स्खलति। तथैव गुरुत्वाकर्षणविषयः पञ्चभूतानाम्प्रागेव पातञ्जलमहाभाष्ये विधिविशेषप्रकरणे आदेशनियामकप्रकरणे निर्दिष्टः "तद्यथा — लोष्ठः क्षिप्रो बाहुवेगं गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति, पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः। सः धूम आकाशे निवाते नैव तिर्यग्गच्छति, नार्वागवरोहति। अब्विकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग्गच्छति, नार्वागवरोहति। ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः" इति। तदित्थं भौतिकविज्ञानं प्रागुन्नतिशिखरमधिरूढं। किं बहुना। अस्मिल्लघुलेखे न सर्वमपि विज्ञानविस्तरं शक्नुमश्चार्चितुम्।

अद्य भौतिकादधिकं वैदिककालतः एव अध्यात्मविज्ञानं प्रवर्धितम्। जगति कियन्तः पदार्थाः सन्ति ? कथं तेषां उत्पत्तिः ? आत्मनः किं स्वरूपम् ?

कथं ज्ञानमुत्पद्यते ? कथञ्च निद्रायां सत्यां ज्ञानाजननम् ? स्वप्नकाले कथं विपरीतं ज्ञानं जायते तत्वज्ञाने वर्तमाने सति पुरुषे ? एतत्सर्वं दर्शन-शास्त्रे प्रतिपादितम् । योगसंयमेनैव सर्वमपि पूर्वजन्मकृतं कर्म, भूतं भव्यञ्च विज्ञायते । जगति नास्ति किमपि वस्तुजातं सूक्ष्मातिसूक्ष्मतरं यत्तत् योगिनां प्रत्यक्षं न भवेत् । न तत् दुर्वीक्षणानुवीक्षणयन्त्रेण किन्तु अध्यात्मज्ञानेन कृतं क्रियते च । अधुनापि तथाविधाः यत्र कुत्रापि योगिनः प्राप्यन्ते । उक्तञ्च न्याय-शास्त्रे "संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्" "प्रत्ययस्य परिचितज्ञानम्" "भुवनज्ञानं सूर्ये संयमात्" "चन्द्रे ताराव्यूहज्ञानम्" एतादृशानि बहूनि सूत्राणि तत्तद्विषयकाणि सन्ति । एवमेव शरीरगतस्नायुप्रविष्टं चञ्चलमानसतत्वमजानन् , न "एक्सरे" किरणविकरणयन्त्रेण नैव छित्वा भित्वा । सर्वथैव एष नियमः, "त्वक्संयुक्तमनः ज्ञानसामान्ये कारणम्" । सुषुप्तिकाले तु त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननम्" । अर्थात् तदा मनः पुरीतति नाड्यां प्रविष्टं भवति । तस्मात् त्वगसंयुक्तेन मनसा ज्ञानाजननमिति । एतत् सर्वं अध्यात्म-ज्ञानेनैव ज्ञातवन्तः न केवलं प्रागेव आधुनिकेऽपि भारते जगदीशचन्द्रवसुप्रभृतयः भारतीयवैज्ञानिकाः स्वीयमुत्कृष्टं मतं विज्ञानजगति प्रख्यापितवन्तः ।

## संतोलनम्

पाश्चात्यविज्ञानं भौतिकवादमूलकं विशेषतः पाश्चात्यविज्ञानस्य तत्रैव पराकाष्ठा भवति । यतो हि तेषामाध्यात्मज्ञानाभावेन केवलभौतिकविज्ञानेनापरमपि सूक्ष्मतरं मानसज्ञानं न जायते । ते भौतिकसाधनेनैव सर्वं ज्ञातुं कामयन्ते । भौतिकं साधनं स्थूलं भवति, तस्मात्तेन ते स्थूलमेव ग्रहीतुं शक्नुवन्ति ।

भारतीयवैज्ञानिकाः मानसतत्वेनातिसूक्ष्मं परमाणु-परिमाणमपि ज्ञातवन्तः । आत्मनः साक्षात्कारमपि कृतवन्तः । युक्तमुक्तं स्वामिविवेकानन्दमहोदयेन "यत्र पाश्चात्यविज्ञानस्य समाप्तिः तत एव भारतीयविज्ञानस्योद्भवः" इति । उक्तञ्च वेदान्तदर्शने "अथातो ब्रह्मजिज्ञासा" भौतिकविज्ञानानन्तरं ब्रह्मजिज्ञासा कर्तव्या । न्यायशास्त्रेऽपि "तत्वज्ञानात् निःश्रेयसाधिगमः" इति । अर्थात् पदार्थ-तत्वज्ञाने निःश्रेयससिद्धिर्भवति इति । "ऋते ज्ञानान्न मुक्तिः" इत्यागमोऽपि सूचयति यत् ज्ञानं विना मुक्तिर्न भवति इति । एवं भारतीयमध्यात्मविज्ञानं पाश्चात्यविज्ञानं अतिशेते ।

[क्रमशः]

# सुलभपाठमाला १२

## सर्वनामशब्दाः (तच्छब्दः)

सः एकः बालः । सा एका बालिका । तत् एकं फलम् । तं बाल अहं जानामि । तां बालिकां अहं जानामि । तत् फलं अहं पश्यामि । तेन बालेन सह वसामि । तया बालिकया सह क्रीडामि । तेन फलेन किं प्रयोजनम् ? तस्मै कृष्णाय नमः । तस्यै सीतायै नमः । तस्मै फलाय प्रयत्नं करोमि । तस्मात् वृक्षात् अयं उन्नतः । तस्याः बालायाः इयं स्थूला । तस्मात् फलात् इदं मधुरम् । तस्य बालस्य पुस्तकं इदं । तस्य फलस्य रसः अयं । तस्मिन् बालके बलं अस्ति । तस्यां बालिकायां बलं नास्ति । तस्मिन् फले रसः अस्ति । ते बालाः अत्र आगच्छन्ति । ताः बालिकाः अत्र आगच्छन्ति । तानि फलानि अत्र तिष्ठन्ति । तान् बलान् अहं आह्वयामि । ताः बालिकाः अहं आह्वयामि । तानि फलानि अहं जानामि । तैः बालैः गृहीतः कन्दुकः । ताभिः बालिकाभिः गृहीतः कन्दुकः । तैः फलैः जीवति गोपः । तेभ्यः बालकेभ्यः इदं चित्रं रोचते । ताभ्यः बालिकाभ्यः इयं कथा रोचते । तेभ्यः पुस्तकेभ्यः कियत् मूल्यं देयम् ? तेभ्यः धनिकेभ्यः धनं ग्रहीतव्यम् । तेभ्यः गृहेभ्यः बहिः आगच्छन्ति बालकाः । तेषां नराणां वचनं सत्यम् । तासां नारीणां वचनं असत्यम् । तेषां फलानां मूल्यं वद । तेषु जनेषु एकता अस्ति । तासु बालिकासु एकता नास्ति । तेषु फलेषु किं रमणीयम् ?

### तच्छब्दः

| | पुंलिङ्गः | | | नपुंसकलिङ्गः | | | स्त्रीलिङ्गः | | |
|---|---|---|---|---|---|---|---|---|---|
| | ए. | ब. | द्वि. | ए. | ब. | द्वि. | ए. | ब. | द्वि. |
| प्र० | सः | ते | तौ | तत् | तानि | ते | सा | ताः | ते |
| द्वि० | तं | तान् | ” | ” | ” | ” | तां | ” | ” |
| तृ० | तेन | तैः | ताभ्यां | शिष्टं पुंलिङ्गवत् | | | तया | ताभिः | ताभ्यां |
| च० | तस्मै | तेभ्यः | ” | | | | तस्यै | ताभ्यः | ” |
| पं० | तस्मात् | ” | ” | | | | तस्याः | ” | ” |
| ष० | तस्य | तयोः | तेषां | | | | तस्याः | तासां | तयोः |
| स० | तस्मिन् | ” | तेषु | | | | तस्यां | तासु | ” |

अस्य शब्दस्य लिंगत्रयेपि रूपाणि सम्यक् अभ्यसितव्यानि ।

# आत्मबोधः

श्री यन्. सी. यस्. वेङ्कटाचार्यः,
शतावधानी.

(१)

यमेऽप्यायाते भोश्चिरय चिरयास्माकमधुना-
वकाशो नास्तीति प्रसभमुदितं येन हि भवेत् ।
स एवाद्यैकं क्षणमपि कथं याप्यमिति हा !
सदा चिन्ताक्रान्तो रुजसि न दिनं वत्सरमपि ॥

(२)

अपि स्वल्पं कार्यं पतति न हि मे संदश इति
प्रभूता चिन्ता ते प्रतिदिनमये किं खरमतिः ?
गतश्चेन्नायाति त्रुटिरपि, गतास्ते कति समाः ?
अपि ध्यायन् देवं क्षणमगमयस्तारकवरम् ? ॥

(३)

श्लेष्मावलग्न इव मक्षिक आहते त्व-
य्यत्यन्तलौकिकदुरुद्धरकार्यजाते ।
ग्राहाभिभूतगजपालनकेलिना स्यात्
दत्तो विमोचयितुमेष महावकाशः ॥

(४)

अद्यापि किं विगतजीवितचिन्तनेन
व्यापाद्यते दिनगणं यदतीत्य नैव
आयाति किंचिद्, उत किं यतसे कृतज्ञः
भोः श्रीनिवासभजने वद मोक्षकामः ॥

(५)

कुचेलत्वं प्राप्यं भवति कतिभिर्जन्मभिरहो !
प्रवेशः प्रासादे यदनु सुलभः स्यादिह हरेः ।
भवद्दैदुष्यं भोः क्व गतमधिकं शोचसि कुतः
हिमाद्र्यग्राद् भूमौ पतित इव मोक्षार्हपदगः ? ॥

## लेखः

प्राप्तश्च भवतां लेखः, पठितश्च। नितान्तं सुन्तुष्टोस्मि। यद्यपि द्रविड़-देशीयानां अस्माकं देशभाषोत्कर्षः स्पृहणीय एव, यथा देशभाषा देशेऽस्मिन् महोन्नतिं प्राप्नुयात् तथाऽस्माभिः यत्नश्च कार्य एव, तथापि आचर्तुमुखात्, आगोपालं, आसेतोः आतुषारशैलं, अतिप्रवृद्धां देववाणीं तिरस्कृत्य क्वचिदपि कोणे पातयित्वा न कदापि केनापि, क्वचिदपि, द्राविडभाषोन्नतिः कर्तुं शक्यते। तथापि द्राविड़भाषामय्यः-काव्यालंकार-ज्योतिष-वैद्य-गणिक - नीति-धर्म - वेदान्तविषयाः सर्वेपि संस्कृभाषामूलकाः। स्वमूलभूतग्रन्थानां याथात्म्येन बोधं विना नत्वेतानव-गन्तुं शकयते।

तथा च द्राविडभषां उच्चस्थानं नेतुकामैः महाभागैः-इदमवधेयं-देवभाषा साहाय्यादेव सा अद्यावधि महोन्नतिं प्राप प्राप्स्यतीति च इतः परं। द्राविडभाषां उन्नतिं नेतुकामैः-गैर्वाण्याः उपेक्षा न कर्तव्या। अत इदमेव प्रार्थये सर्वासु कलाशालासु (School and Collages) सैषा देवभाषा अद्यावधि यादृशीं स्थितिं अन्वभूत् तामेव परिरक्षितुं यतन्तां अत्र भवन्तः।

इत्थं
पण्डितप्रवरः, मीमांसा शिरोमणिः, मीमांसालंकारः,
**आर्. वैद्यनाथशास्त्री.**

कार्यदर्शी
**संस्कृताभिवर्धनी सभा, काञ्ची.**

---

### संस्कृतभाषाव्यापनाय भारतसर्वकारस्य

## प्रवृत्तयः

भारतसर्वकारस्य चक्षुरद्य किंचिदुन्मीलितमिव प्रतिभाति। संस्कृतभाषा-संघसूचिताः संस्कृतव्याप्त्युपायाः सर्वेपि प्रायशस्सर्वकारेण अनुमोदिताः।

एतदनुगुणतया विश्वविद्यालयेषु अन्यसंस्थासु च संस्तकृतविद्याव्यापन-सौकर्याणि कल्पयितुं विद्यासचिवविभागः बहूनि पथकानि निर्मितवान् । प्रचीन-बोधनसरण्यां उत्तमसंप्रदायान् रक्षितुं कानिचन विधानानि आचरणे स्वीकृतान्यपि । उत्तमानां संस्कृतग्रन्थानां प्रकाशनाय साहाय्यदानम्, संस्कृतपत्रिकाणां पोषणम्, प्रख्यातपण्डितानां तदधीनजीवनानां च आर्थिकावलम्बदानम् एवमादीनि आचारणेन सम्मान्यन्ते ।

पाठशालासु संस्कृतव्यापनार्थं केन्द्रीयसंस्कृतसमितेः उपदेशेन कांचित् प्रणालिकां रचयितुं, संकृतभाषाबोधनरहितासु विद्याशालासु महोन्नतपाठशालासु च नियतं संस्कृताध्यापकानां निवेशनार्थं भाविनः व्ययस्य सर्वस्य भारतप्रभुत्वेनैव प्रान्तप्रभुत्वेभ्यः अनुदानत्वेन प्रदानम्, नूतनविषयाणां संस्कृते परिवर्तनाय प्रकाश-नाय च राष्ट्रप्रभुत्वेभ्यः विस्तृततया अनुदानम् इत्येवमादीनि भारतसर्वकारेण अंगीकृतानि । एतच्च संस्कृतस्य उषःकाल इव प्रतिभाति ॥



# विश्वावसुवत्सर

## सभायाः उत्सवकार्यक्रमः

२— ४—६५ नूतनवत्सरारम्भमहोत्सवः ।
५— ४—६५ मध्वजयन्ती ( चैत्रशुक्लचतुर्थी ) ।
१०—४—६५ वाल्मीकिजयन्ती ।
५— ५—६५ रामानुजजयन्ती ।
६— ५—६५ शंकरजयन्ती ।
१८—७—६५ व्यासजयन्ती ।
२५—८—६५ सभाजन्मदिनम् (श्रावणकृष्णचतुर्दशी) ।
३०—८—६५ विनायकचतुर्थी ।
५—१०—६५ कालिदासजयन्ती ।
३— १—६६ गीताजयन्ती ।
१८—२—६६ शिवरात्रिमहोत्सवः ।



# वञ्चको वञ्च्यते

रचयिता — **माचिराजु शिवरामराजः**



रमेशः विजयनगरे यस्. यस्. यल्. सी. (S. S. L. C.) कक्ष्यां पठति। सः धनिकः। गणिते (Mathes) सः निर्बलः। वार्षिकपरीक्षाः समासन्नाः। श्व एव परीक्षा आरभ्यन्ते। रमेशः सम्यक् पठित्वा सर्वा अपि परीक्षाः सम्यग् उदतरत्। अन्तिमा गणितपरीक्षा। तस्य रमेशस्य मनसि महती चिन्ता समजायत। रात्रौ सः तदेव चिन्तयन्नास्त। दैववशात् तस्मिन्नेव समये आपद्बान्धवः विद्यार्थिकल्पतरुः भगवान् श्रीवेंकटेश्वरः तस्य स्मृतिपथे अचलत्। सः भगवन्तं एवं प्रार्थयामास।

"हे भगवन्! दीनबन्धो! वेङ्कटेश्वर! स्वीकुरु मे नमांसि। श्रुणु मदीयां प्रार्थनाम्। अहं तावत् गणिते मूढः। यदि श्वः अहं गणितपरीक्षां भवद्दयया सम्यक् समाधास्यामि तर्हि अहं शेषाद्रिं प्रति आगमिष्यामि। केशानर्पयिष्यामि। भवदीयकोशे (HUNDY) दशरूप्यकाणि प्रक्षेप्स्यामि। नारिकेलशतं चार्पयिष्यामि। कृपया श्वः गणितप्रश्नपत्रं मे सुलभं भवतु। वरं देहि प्रभो" इति।

भगवान् तस्य दीनालापं श्रुतवानेव भवेत्। अपरस्मिन् दिने प्रश्नपत्रं सुलभमासीत्। कालः सार्धघण्टाद्वयम्। रमेशः एकघण्टायामेव समादधत परीक्षाम्। एकोऽपि तावत्पर्यन्तं न बहिर्गतवान्। अयं रमेशः प्रथमं बहिः गन्तुं नैच्छति। अतः कालव्ययार्थं पत्रं गृहीत्वा श्रीवेंकटेश्वरं स्मृत्वा "कियद्वा धनं व्ययीभवति यात्रायै" इति गणयितुमारेभे पत्रे। सधूमशकटप्रयाणमूल्यं (with Railway charges) रूप्यकशतस्य व्ययो भवेत् इति निश्चित्य मनस्येवमचिन्तयत् – "अहो! रूप्यकशतम्!! भगवतः। मह्यं महाननर्थः। मुण्डं असह्यं भवति। नारिकेलशतेऽपि, एकस्मिन् नारिकेले यज्जलं तदेव खलु भवति। अतः कुतः नारिकेलशतार्पणम्। एकनारिकेलार्पणे को दोषः? "सर्वं विष्णुमयं जगत्" इत्युच्यते किल। भगवानत्राप्यस्ति। कुतो वा शेषशैलगमनम्? बहवः महान्ति

धनानि अर्पयन्ति । किं वा भवति भगवतः मद्रूप्यकदशकेन । अतः यात्रा मास्तु । अस्माकं गृहे एव नारिकेलार्घ्यर्पयामि भगवते । एकं नारिकेलं पञ्चाशत्पैसाः । ननु भगवतैव गीतायां "पत्रं पुष्पं फलं तोयं" इत्युक्तम् । अतः भवक्त्या तोयेनैव भगवन्तं वेंकटेशं पूजयामि इति । एवं चिन्तयत्येव तस्मिन्, "कालः समाप्त" इति सूचयन्ती घण्टा ताडिता । तत्सम्भ्रमे त्वरया प्रमादवशात् स्वकृतयात्राव्ययपट्टिकां केवलं अध्यापकाय दत्वा गृहमागच्छत् सः । गृहं आगत्य उत्तरपत्रं दृष्ट्वा "हा ! हन्त ! मम प्रमादः । नूनं वञ्चको वञ्च्यते । भगवन्तं एव वञ्चयितुं प्रवृत्तोऽहं वञ्चितः स्वयमेव" इति खिन्नः अरुदत् स बालिशः ।



## मनोरंजनम्



एकः — एतस्य अन्नसंकटस्य निरासाय कोपि मार्गः आलोच्यते वा अस्मन्नेतृभिः ?

अपरः — आलोचितः ते विज्ञापयन्ति जनान् अल्पमत्तुं अथवा शाकशलाट्वादिकेन कुक्षिं भर्तुम् च ।

एकः — अरे, शलाट्वादिकमपि अन्यदेशेभ्यः प्रेषयितुं सर्वकारो यतते इदानीम् । अतः शाकादयश्च अधिकमूल्याः संजाताः । अतोस्माभिः वाताम्बुपर्णाशनैरेव भाव्यम् ।





# वार्ताः

राष्यावैज्ञानिकाः व्योमयाननौकायां ३०० मैलपर्यन्तं ऊर्ध्वं गत्वा भूमाविव विहृत्य सकुशलं भुवमवतीर्णाः । अनेन इतःपरं चन्द्रमण्डलयात्रां सुकरां ते मन्यन्ते ॥

  

अय्यूबखानस्य चैनापर्यटनात् मन्यते भारतस्य उभाभ्यां देशाभ्यां महानिरोधः करिष्यते इति ॥

  

विदेशं गतः अब्दुल्लाहः भारतविरुद्धं प्रचारं यावच्छक्ति करोति ॥

  

केरलराष्ट्रनिर्वाचने कम्यूनिष्ठाः (समाजवादिनः) बहुसंख्याकाः निर्वाचिताः । परन्तु निर्वाचितेषु बहवः कारागारे वर्तन्ते । तान् विना प्रभुत्वं स्थापयितुं तस्यापि पक्षस्य नास्ति शक्तिः । कांग्रेसपक्षे द्वैधीभावात् सोपि प्रतिपक्षतामेव वांछति । अतः पुनः अध्यक्षपालनमेव भवेद्वा इति संशेरते प्रजाः ।

आन्ध्रप्रदेशे निकटभविष्ये एव आन्ध्री आधिकारिकी भाषा विधास्यन्ते । एवमेव तत्तद्राष्ट्रेषु तत्तत्प्रादेशिक्यः भाषाः आधिकारिक्यः विधास्यन्ते ॥

  

चित्पुरे रामविलाससभाभवने २१—३—६५ दिने अभिनयकोविदस्य श्री चित्तूरु नागय्यस्य, गायकसार्वभौमस्य श्री चित्तूरु सुब्रह्मण्यस्य, प्रसन्नकवेः श्री सुन्दराचार्यस्य च सन्मानोत्सवः महता संरम्भेण प्राचलत् ॥

  

तिरुपतिनगरे अन्नमाचार्यजयंत्युत्सवाः दिनत्रयं महावैभवेन निरवाह्यन्त ॥

  

संस्कृतभाषाप्रचारिण्याः सभायाः उत्तरायणपरीक्षाः मार्च २७, २८, २९ तिथिषु निरातङ्कं ३८ केन्द्रेषु निर्व्यूढाः ॥

काञ्चीपुर्यां विद्वदग्रेसराणां श्रीमतां प्र. भ. अण्णंगराचार्यस्वामिनां ७४ अब्दपूर्तिमभिलक्ष्य मार्च १२ दिनात् २१ दिनपर्यन्तं नवाहानि मीनविशाखोत्सवः अत्यधिकानन्दमेदुरतया प्राचलत् । उभयवेदपारायणं विदुषां मोदावह आसीत् ।





# व्यासवाल्मीकिसंवादः



महाविद्वान्
श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामी

( पूर्वानुबन्धः )

**वाल्मीकिः** – क्षुद्रकीटनिर्विशेषस्य निशाचरपतेर्निरसनं महावीरधीरधौरेयो दाशरथिरवलीलया कर्तुं प्रभवन्नपि भृशं व्यलम्बतेत्यत्र हेतुः यथाकथञ्चित्तदाभिमुख्यसंपिपादयिषैवेति मयोक्तं श्रीमताऽभिनन्दितमिति संतुष्यामि । "अस्मिन्नेव परमार्थे अन्या अपि काश्चिदुपपत्तीः शुश्रूषे" इतितावत्प्रोक्तं श्रीमता । तथैव श्रावये रावणवधानन्तरं विभीषणं प्रति राघवस्य वचनमित्थमवलोक्यते—"मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् । क्रियतामस्य संस्कारो यथा ह्येष तथा मम ॥" इति । निधनं गतस्य रावणस्यौर्ध्वदेहिकं कर्तुं विभीषणादन्यो न कोऽप्यवशिष्यते । पुत्रादयः परिकरास्सर्वेऽपि प्रागेव हि पञ्चतामगुः । अतो विभीषणेनैव चरमक्रियाऽस्य कर्तव्या समापतिता । विभीषणस्तु 'महापापिनोऽस्य संस्कारं नाहं कुर्याम्' इति बद्धमुष्टिरवतिष्ठते । तदात्वे तमुद्दिश्य रामः प्राह "मरणान्तानि वैराणी"त्यादि । भगवन् बादरायण! श्लोकस्यास्य तत्रभवान् कीदृशमर्थं गृह्णातीति जिज्ञासे; कथ्यतां कृपया ।

**व्यासः** – ( श्लोकमेतं द्विस्त्रिराकर्ण्य ब्रवीति ) मम प्रतिभातमर्थमभिदधामि मुने । लोके तस्य तस्य जनस्य तेषुतेषु जनेषु उपाधिवशाज्जायमानं वैरं मरणपर्यन्तमेव ननु; मृते जने वैरस्यानुवर्तनम् असमर्थकृत्यं खलु । एवं च रावणेऽस्माकं जातं वैरमपि मरणावधिकमेव भवितुं युक्तम् । प्राप्तमरणेऽप्यस्मिन् रावणे अद्यापि वैरवहनमस्माकं नैवोचितम् । [ निर्वृत्तं नः प्रयोजनम् ] एतस्य पापिनो दशवदनस्य प्राणैर्वियोजनम् सीतायाः स्वायत्तीकरणं चास्माकमभिमतं प्रयोजनमासीत् ; तच्च प्रयोजनं सुसम्पन्नं नः संप्रति । इतः परमपि रावणेऽस्मिन्

मात्सर्यवहनमस्माकमनावश्यकमेव खलु विभीषण। मात्सर्यानुवृत्त्यैव खलु भवान् चरमकृत्यमस्य नानुतिष्ठेयमिति कथयति; नैव साम्प्रतमेतत्। अस्थाने वैरं विसृज्य कर्तव्यमौर्ध्वदेहिकं कुरु तावद्विभीषण! इति राघवः कथयतीति श्लोकेनानेन प्रतिपद्ये। एवमेव खल्वर्थः। किमन्यथाऽप्यर्थस्सुवचोऽत्र?।

**वाल्मीकिः** – यथावस्थितस्यार्थस्य मन्मुखाच्छुश्रूषया श्रीमता प्रतिपादित एवमर्थ इति मन्ये। विपणिपुराणप्रवचनपरैः कथयितुं योग्यममुमर्थं भवान् हार्दं नैवाभिदध्यात्। अस्तु तावत्। विज्ञापये भगवन्! निशम्यताम्। अतीते काले रावण एव राघवे वैरमुदवहत्; न राघवो रावणे मात्रयाऽपि वैरवानासीत्। "विभीषणो वा सुग्रीव! यदि वा रावणस्स्वयम्" इतीमां राघवोक्तिमुपादाय अधस्ताद्विवृतं नैव विस्मर्तव्यम्। रावणपरिग्रहेऽप्यभिनिवेशशालिनो राघवस्य हृदयंगमो ह्यर्थो व्याख्यातव्यः। स तावदर्थ एवम्; अयि विभीषण! रावणस्यास्य जीवतस्सत एव कतिचिदुपकारान् कर्तुमहमुत्कण्ठित आसम्; सोऽयं तदवकाशमप्रदाय भूयांसि वैरकार्याणि कुर्वन्नवर्तत। महर्षिषु भृशमपचरितवान्। व्ययूयुजद्वैदेहीम्। प्राणनिर्विशेषं भगवन्तं जटायुं हिनस्ति स्म। एवंविधानि वैरकार्याण्यसौ मरणपर्यन्तमेव हि कर्तुं प्राभवत्। इतः परमप्येवं कर्तुमसौ न खलु प्रभविता। इत्येवंतात्पर्यकं" मरणान्तानि वैराणीत्येतत्।

**व्यासः** – वैराणीत्यस्य वैरकार्याणीत्यर्थ इव। सुसमञ्जसमेतत्। अन्यथा बहुवचनस्वारस्यं नैवस्यात्। अर्थोऽयमुपपद्यते वस्तुतः। सानन्दमङ्गीकरोम्यमुमर्थम्। "निर्वृत्तं नः प्रयोजनम्" इत्यनन्तरवाक्यं खलु प्रधानमिह। तस्य कीदृशमर्थमभिधास्यसीति प्रतीक्षे।

**वाल्मीकिः** – "निर्वृत्तं नः प्रयोजन"मिति वाक्यमेव श्लोकेऽस्मिन् जीवितसर्वस्वमिति अहमिव भवानपि प्रत्येतीति प्रह्वप्यामि। अस्यैव वाक्यस्यार्थतत्वं यथावदवगन्तव्यम्। 'रावणस्यास्य वध एव नः प्रयोजनम्; निर्वृत्तं चैतत्' इत्यर्थवर्णनं नैवोचितं नैवोचितम्। सर्वथाऽप्यचारुश्चायमर्थः। राघवहृदयविप्रतीपश्चायमर्थः। सीतायाः स्वायत्तीकरणं च रामधिया न प्रयोजनं भविष्णु; "त्वयि किंचित्समापन्ने किं कार्यं सीतया ममे"ति ह्युक्तवान् राघवो वानरवीरमुद्दिश्य। यथावस्थितोऽर्थ एषः। रावणविषयेऽस्माभिश्चिकीर्षितानामुपकाराणाम् अप्रतिषेधमात्रमेवैतत्सकाशात्प्रतीक्षितमासीत्। न तु प्रार्थनादिकं किमपि। अप्रतिषेधरूपं

तत्तु प्रयोजनं नैतावता कालेन निर्वृत्तं हन्त । संप्रति तु निर्वृत्तम् । सुष्ठु विव्रियते चैतत् । भगवान् हि चेतनानां हितान्येव विधातुं बद्धदीक्षः । स्वविधित्सितानि हितानि निर्हेतुकमेव विधातुं प्रभवन्नप्येषः "सर्वज्ञोऽपि हि विश्वेशः । सदाकारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्रक्ष्यापेक्षां प्रतीक्षते ॥" इति शास्त्रोक्तरीत्या चेतनसकाशाद्यत्किञ्चिदपेक्षत इति प्रतिभाति । तथा भगवताऽपेक्ष्यमाणं वस्तु किमिति चेत् न तत् निष्कृष्य वक्तुं शक्यम् । कर्मज्ञानभक्तियोगादिषु यत्किञ्चित्प्रतीक्षेतापि । अप्रतिषेधमात्रं प्रतीक्षेतापि ।

**व्यासः** – मध्ये पृच्छामि भोः ! भवदुदाहृते प्रमाणश्लोके "संसारतन्त्रवाहित्वात् रक्ष्यापेक्षां प्रतीक्षते" इतितावत्सुस्पष्टं वर्तते। एवं स्थिते 'अप्रतिषेधमात्रं प्रतीक्षेतापि' इति यदुच्यते भवता, तत् कथमुपपद्येतेति ।

**वाल्मीकिः** – भगवन् ! विज्ञापये क्रमेण । कृपया श्रोतव्यम् । भगवत्कृपाप्रवाहस्य अस्मासु यथा नाम प्रसरो न स्यात्तथा वयं स्वच्छन्दचारिणो भवामः । एतदेव कृपाप्रतिषेधो नाम । चेतनानां प्रतिकूलवृत्तीस्समीक्ष्य भगवान् भृशं दूयते 'हा हन्त ! पापी सोऽयं मत्करुणाप्रवेशलेशस्याप्यवकाशमप्रयच्छन् रुणद्धि खलु' इति । अनुकूलप्रवृत्तिं मनागप्यकुर्वन्नपि चेतनो विपरीतप्रवृत्तिषु वा यदि विरतो भवति, तदा भगवत्कृपापूरः अप्रतिहतप्रसरः स्यादेव कामम् । "यद्ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे । एवं सदा सकलजन्मसु सापराधं क्षाम्यस्यहो ! तदभिसन्धिविराममात्रात् ॥" इत्येषा सदाचार्यसूक्तिरवधेया । अत्र चतुर्थचरणार्थो नितरामवधेयः । चेतनः सुकृतविशेषान् करोतु मा वा; दुष्कृतकरणाद्यदि विरमति, तर्हि तावतैव भगवान् दयमानमना भवतीति तदर्थः । वयं यत्किमपि सुकृतं न कुर्म इत्यास्तां नाम; न काचिदत्र चिन्ता । निरंकुशभगवत्करुणापूरप्रसरप्रत्यूहतया तेन सह भगवता प्रस्पर्धितुं यदि वयं प्रवर्तेमहि, तर्हि भगवतो निर्वेद एव भवति नितराम् । तादृशदुष्प्रवृत्तिविरतिमात्रे अमन्दानन्दसंदोहकन्दलितस्वान्तो भगवान् अनुजिघृक्षाविवश एव भवति । रावणो यद्यपि वैदेहीहरणजटायुर्हिंसनादिविपरीताचरणनिरत आसीत्, तथाऽपि दुश्चरितेषु भगवान् राघवो दृष्टिं न निदधे । "यो वज्रपाताशनिसंनिपातान्न चक्षुभे नापि चचाल राजा । स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥" इति श्लोकोक्तरीत्या तत्कृतचापविसर्जनरूपयुद्धविरतिमात्रमेव सुमहत्तरं सुचरितं मन्वानो राघवः "गच्छानुजानामि" इत्यादिवचोमृतैरनुकम्पामात्मीयामदर्शयत् ।

हन्त ! स रावणो नैव वेद भगवतो हृदयम् । निजगृहगमनानुज्ञां प्राप्य गतो रावणो यदि पुनरपि युद्धोन्मुखो नागमिष्यत्तर्हि भगवान् दीनदयालुः राघवः तमेव खलु दशाननं लङ्काधिनाथं कृतवानभविष्यत् ।

**व्यासः** – नैष वादो युज्यते; राघवो "गच्छानुजानामी"त्येतावदेव नावोचत् ; "रणार्दितस्त्वं प्रविश्य रात्रिञ्चरराज! लङ्काम् । आश्वास्य निर्याहि रथी सधन्वी तदा बलं द्रक्ष्यसि मे रथस्थः ॥ " इति श्लोकशेषेण युद्धार्थं पुनरागमनमपि ह्याज्ञापयामास । तदाज्ञानुसारेणैव पुनर्योद्धुं प्रवृत्ते तस्मिन् दशास्ये हन्त ! को दोषः ?

**वाल्मीकिः** – सत्यमुक्तं राघवेण 'आश्वास्य निर्याहि' इति । आः ! किं तत् अन्तःकरणाभिसहितं राघवस्य ? "आश्वास्य युद्धे विरतिं कुरुष्व" इति कथनस्थाने हि तथा कथितम् । विपरीतलक्षणाऽत्रेति ग्रहीतुमशक्तस्स विवेकान्धो रावणो दौर्भाग्यबलादेव पुनर्योद्धुमाययौ । सैव हि पुनर्युद्धप्रवृत्तिः राघवचिकीर्षितानुग्रहप्रत्यूहकारिणी बभूव । "निर्वृत्तं नः प्रयोजनम्" इति प्रकृतवाक्यमिदानीं परामृशेम । एतन्निगदतो राघवस्य हृदयमिदमेव; अस्मच्चिकीर्षितानुग्रहप्रतिरोधो यस्य रावणस्य सकाशादियता कालेन प्राप्तः, यश्चास्मदनुग्रहावकाशं नैव दिदेश; स एवाधुना मृतिं गतो न प्रतिषेधलेशमपि कर्तुमलम् ; मत्प्रवृत्तिविरोधिनी स्वप्रवृत्तिरस्मिन् सर्वथा निवृत्ता खलु–इत्यानन्दशाली रामचन्द्र ईदृशीं निवृत्तिमेव परमप्रयोजनं मन्यमानस्सन्" निर्वृत्तं नः प्रयोजन"मिति निजगाद ।

**व्यासः** – सुचारुतरमुपन्यस्यते तत्र भवता । वस्तुतो रामचन्द्र हृदयस्थितोह्ययमेवार्थः । कस्यापि बुद्धेरगोचर एवासौ । भवदुक्तिशेषमधुना । अहमेव पूरयामि । अस्मच्चिकीर्षितां दयां प्रतिरोद्धुमधुना अत्यन्तमशक्तस्य रावणस्य विषये साम्प्रतमस्माकं सुचरितमेतावदेव भो विभीषण । यदुत अदसीयं गात्रं कङ्कगृध्रादिभक्षितं यथा न भवेत्तथा नाम संस्करणम् । तदिदमनुतिष्ठतु भवान् विभीषण ! यदि भवान् नानुतिष्ठेत्तर्हि मया सोदरत्वेन स्वीकृतस्य भवतोऽयं रावणस्सोदर स्सन् ममापि सोदरतां गत इति हेतुना तमिम महमेव संस्कर्तुं संनद्धोयम् । इत्येव मभिधानमेव मरणान्तानि वैराणीति श्लोकसिद्धम् ।

[ क्रमशः ]

# आन्ध्रप्रदेश - साहित्य - विद्वत्सभा (अकाडमी)

## समावेशाः

एतत्सभायाः महाजनसभा 27-3-65 दिने हैदराबादनगरे आन्ध्रसारस्वतपरिषन्मंदिरे सायं त्रिघंटासमये समाविष्टा। श्री बेजवाड गोपालरेड्डिमहोदयः आध्यक्ष्यमवहत्। विविधप्रदेशेभ्यः पञ्चाशत सभ्याः समागमन्।

सभानियमावल्यां कानिचन परिवर्तनानि कृतानि एवम् —

1. साधारणसभ्यानां पदवीकालः पंचवर्षात्मिका भविष्यति।
2. सभ्याश्च इतःपरं 65 संख्याका भविष्यन्ति।
3. एषु च 20 संख्याका सारस्वतसंस्थाभिः निर्वाचिता एव स्युः।
4. अस्याः सभायाः विशिष्टसभ्याः (Fellows) 15 संख्याकाः स्युः। तेषां वयः पंचपञ्चाशदधिकं पञ्चसप्तत्यनधिकं च भवेत्। अस्य वत्सरस्य पंचैव ते स्युः। ते च नामतः (1) श्री स. राधाकृष्णन् महोदयः, अस्मद्राष्ट्रपतिः (2) श्री काशी कृष्णाचार्यः, अस्मदास्थानकविः (3) श्री गिडुगु सीतापतिः (4) श्री तापी धर्मारावः (5) श्री वीरभद्ररावः इति।

सायं च श्री बे. गोपालरेड्डिमहोदयस्य आध्यक्ष्येण आन्ध्रप्रदेशमुख्यमन्त्रिणा श्रीमता ब्रह्मानन्दरेड्डिना एते ग्रन्था आविष्कृताः (1) उत्तरभारतसाहित्यमुलु (2) भारतरचयित्रुलु (3) तेलुगुसामेतलु (4) अंजद् रूबाईलु (5) सूरदासु पदालु (6) उत्तररामचरित्रमु (7) तेलुगुकथानिकलु (8) पोतनमहाभागवत (हिन्द्यनुवादः) (9) राघवाभ्युदयमु (10) सुमति वेमन (संस्कृतानुवादः) (11) साहित्योपन्यासमुलु (12) आन्ध्रदेशहास्यकथाः (संस्कृतम्) (13) मोमिन् मीर् तंकिन् काज़िम (14) सुरूद्-ए-वस्त (15) षीष् वतीष्

28 तिथौ प्रातस्सायं च विद्वत्सभायाः समावेशाः प्राचलन्।

सायं आन्ध्रप्रदेशमन्त्रिणः श्रीमतः गोट्टिपाटि ब्रह्मय्यस्य आध्यक्ष्येण सन्मानसमावेशः निर्व्यूढः। कलाप्रपूर्ण बिरुदभाजोः श्री काशीकृष्णाचार्य-श्री विश्वनाथसत्यनारायणयोः, केन्द्रसाहित्यअकाडम्या जातीयपारितोषिकेण सम्मानितस्य श्री जाषुवा कवेश्च सम्मानकार्यक्रमः अतिमनोहरं प्रवर्तितः।



R. N. 8145/60. Postal No. R. H. 493.

वार्षिकम् रु. ४-००

# प्रहेलिकाः



अपदो दूरगामी च साक्षरो न च पंडितः ।
अमुखः स्फुटवक्ता च यो जानाति स पंडितः ॥

( लेखः )

वने जाता वने त्यक्ता वने तिष्ठति नित्यशः ।
पण्यस्त्री न तु सा वेश्या यो जानाति स पंडितः ॥

( नौका वने = अरण्ये, जले च, पण्यस्त्री = धनगृह्या स्त्रीलिंगयुता )

गोपालो नैव गोपालः त्रिशूली नैव शंकरः ।
चक्रपाणिः स नो विष्णुः यो जानाति स पंडितः ॥

( महोक्षः - स च गाः पाति मुद्रारूपेण त्रिशूलं चक्रं च स्वांगे धरति । )



Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate & Secretary,
S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000.